॥ दशावतार हरिगाथा ॥

प्रलयोदन्वदुदीर्ण-जलविहारा-निविशाङ्गम् ।
कमलाकान्त-मण्डित-विभवाब्धिं हरिमीडे ॥ १॥

चरमाङ्गोद्ध्र्ध्इत-मन्दरतटिनं कूर्मशरीरम् ।
कमलाकान्त-मण्डित-विभवाब्धिं हरिमीडे ॥ २॥

सित-दंष्ट्रोद्धृत-काश्यपतनयम् सूकररूपम् ।
कमलाकान्त-मण्डित-विभवाब्धिं हरिमीडे ॥ ३॥

निशित-प्राग्र-नखेन जित-सुरारिं नरसिंहम् ।
कमलाकान्त-मण्डित-विभवाब्धिं हरिमीडे ॥ ४॥

त्रिपद-व्याप्त-चतुर्दश-भुवनं वामनरूपम् ।
कमलाकान्त-मण्डित-विभवाब्धिं हरिमीडे ॥ ५॥

क्षपित-क्षत्रियवंश-नगधरं भार्गवरामम् ।
कमलाकान्त-मण्डित-विभवाब्धिं हरिमीडे ॥ ६॥

दयिताचोर-निबर्हण-निपुणं राघवरामम् ।
कमलाकान्त-मण्डित-विभवाब्धिं हरिमीडे ॥ ७॥

मुरली-निस्वन-मोहितवनितं यादवकृष्णम् ।
कमलाकान्त-मण्डित-विभवाब्धिं हरिमीडे ॥ ८॥

पटुचाटिकृत-निस्फुट-जननं श्रीघनसंज्ञम् ।
कमलाकान्त-मण्डित-विभवाब्धिं हरिमीडे ॥ ९॥

परिनिर्मूलित-दुष्टजन-कुलं विष्णुयशोजम् ।
कमलाकान्त-मण्डित-विभवाब्धिं हरिमीडे ॥ १०॥

अकृतेमां विजयध्वजवरतीर्थो हरिगाथाम् ।
अयते प्रीतिमलं सपदि यया श्रीरमणोयम् ॥ ११॥

॥ इति श्री विजयध्वजतीर्थकृता दशावतारहरिगाथा समाप्ता॥